॥ श्रीदत्तसहस्रनामस्तोत्रम् दकारादि ॥

॥ अथ ध्यानम्॥

यावदद्वैतभ्रमस्तावन्न शान्तिर्न परं सुखम् ॥

अतस्तदर्थं वक्ष्येऽदः सर्वात्मत्वावबोधकम् ॥

॥ अथ श्री दकारादि श्री दत्त सहस्रनामस्तोत्रम् ॥

ॐ दत्तात्रेयो दयापूर्णो दत्तो दत्तकधर्मकृत् ।
दत्ताभयो दत्तधैर्यो दत्तारामो दरार्दनः ॥ १॥

दवो दवघ्नो दकदो दकपो दकदाधिपः ।
दकवासी दकधरो दकशायी दकप्रियः ॥ २॥

दत्तात्मा दत्तसर्वस्वो दत्तभद्रो दयाघनः ।
दर्पको दर्पकरुचिर्दर्पकातिशयाकृतिः ॥ ३॥

दर्पकी दर्पककलाभिज्ञो दर्पकपूजितः ।
दर्पकोनो दर्पकोक्षवेगहृद्दर्पकार्दनः ॥ ४॥

दर्पकाक्षीड् दर्पकाक्षीपूजितो दर्पकाधिभूः ।
दर्पकोपरमो दर्पमाली दर्पकदर्पकः ॥ ५॥

दर्पहा दर्पदो दर्पत्यागी दर्पातिगो दमी ।
दर्भधृग्दर्भकृद्दर्भी दर्भस्थो दर्भपीठगः ॥ ६॥

दनुप्रियो दनुस्तुत्यो दनुजात्मजमोहहृत् ।
दनुजघ्नो दनुजजिद्दनुजश्रीविभञ्जनः ॥ ७॥

दमो दमीड् दमकरो दमिवन्द्यो दमिप्रियः ।
दमादियोगविद्दम्यो दम्यलीलो दमात्मकः ॥ ८॥

दमार्थी दमसम्पन्नलभ्यो दमनपूजितः ।
दमदो दमसंभाव्यो दममूलो दमीष्टदः ॥ ९॥

दमितो दमिताक्षश्च दमितेन्द्रियवल्लभः ।

दमूना दमुनाभश्च दमदेवो दमालयः ॥ १०॥

दयाकरो दयामूलो दयावश्यो दयाव्रतः ।
दयावान् दयनीयेशो दयितो दयितप्रियः ॥ ११॥

दयनीयानसूयाभूर्दयनीयात्रिनंदनः ।
दयनीयप्रियकरो दयात्मा च दयानिधिः ॥ १२॥

दयार्द्रो दयिताश्वत्थो दयाश्लिष्टो दयाघनः ।
दयाविष्यो दयाभीष्टो दयाप्तो दयनीयदृक् ॥ १३॥

दयावृतो दयापूर्णो दयायुक्तान्तरस्थितः ।
दयालुर्दयनीयेक्षो दयासिन्धुर्दयोदयः ॥ १४॥

दरद्रावितवातश्च दरद्रावितभास्करः ।
दरद्रावितवह्निश्च दरद्रावितवासवः ॥ १५॥

दरद्रावितमृत्युश्च दरद्रावितचंद्रमाः ।
दरद्रावितभूतौघो दरद्रावितदैवतः ॥ १६॥

दरास्त्रधृग्दरदरो दराक्षो दरहेतुकः ।
दरदूरो दरातीतो दरमूलो दरप्रियः ॥ १७॥

दरवाद्यो दरदवो दरधृग्दरवल्लभः ।
दक्षिणावर्तदरपो दरोदस्नानतत्परः ॥ १८॥

दरप्रियो दस्रवन्द्यो दस्रेष्टो दस्रदैवतः ।
दरकण्ठो दराभश्च दरहन्ता दरानुगः ॥ १९॥

दररावद्रावितारिर्दररावार्दितासुरः ।
दररावमहामंत्रो दरारार्पितभीर्दरीट् ॥ २०॥

दरधृग्दरवासी च दरशायी दरासनः ।
दरकृद्दरहृच्चापि दरगर्भो दरातिगः ॥ २१॥

दरिद्रपो दरिद्री च दरिद्रजनशेवधिः ।
दरीचरो दरीसंस्थो दरीक्रीडो दरीप्रियः ॥ २२॥

दरीलभ्यो दरीदेवो दरीकेतनहृत्स्थितिः ।
दरार्तिहृद्दलनकृद्दलप्रीतिर्दलोदरः ॥ २३॥

दलादर्नष्यनुग्राही दलादनसुपूजितः ।
दलादगीतमहिमा दलादलहरीप्रियः ॥ २४॥

दलाशनो दलचतुष्टयचक्रगतो दली ।
द्वित्र्यस्रपद्मगतिविद्दशास्राब्जविभेदकः ॥ २५॥

द्विषड्दलाब्जभेत्ता च द्व्यष्टास्राब्जविभेदकः ।
द्विदलस्थो दशशतपत्रपद्मगतिप्रदः ॥ २६॥

द्व्यक्षरावृत्तिकृद्-द्व्यक्षो दशास्यवरदर्पहा ।
दवप्रियो दवचरो दवशायी दवालयः ॥ २७॥

दवीयान्दवक्त्रश्च दविष्ठायनपारकृत् ।
दवमाली दवदवो दवदोषनिशातनः ॥ २८॥

दवसाक्षी दवत्राणो दवारामो दवस्थगः ।
दशहेतुर्दशातीतो दशाधारो दशाकृतिः ॥ २९॥

दशषड्बंधसंविद्दो दशषड्बंधभेदनः ।
दशाप्रदो दशाभिज्ञो दशासाक्षी दशाहरः ॥ ३०॥

दशायुधो दशमहाविद्याचर्यो दशपञ्चदृक् ।
दशलक्षणलक्ष्यात्मा दशषड्वाक्यलक्षितः ॥ ३१॥

दर्दुरव्रातविहितध्वनिज्ञापितवृष्टिकः ।
दशपालो दशबलो दशेन्द्रिय विहारकृत् ॥ ३२॥

दशेन्द्रिय गणाध्यक्षो दशेन्द्रियदृगूर्ध्वगः ।
दशैकगुणगम्यश्च दशेन्द्रियमलापहा ॥ ३३॥

दशेन्द्रियप्रेरकश्च दशेन्द्रियनिबोधनः ।
दशैकमानमेयश्च दशैकगुणचालकः ॥ ३४॥

दशभूर्दर्शनाभिज्ञो दर्शनादर्शितात्मकः ।
दशाश्वमेधतीर्थेष्टो दशास्यरथचालकः ॥ ३५॥

दशास्यगर्वहर्ता च दशास्यपुरभञ्जनः ।
दशास्यकुलविध्वंसी दशास्यानुजपूजितः ॥ ३६॥

दर्शनप्रीतिदो दर्शयजनो दर्शनादुरः ।
दर्शनीयो दशबलपक्षभिच्च दशार्तिहा ॥ ३७॥

दशार्तिगो दशाशापो दशग्रन्थविशारदः ।
दशप्राणविहारी च दशप्राणगतिर्दृशिः ॥ ३८॥

दशाङ्गुलाधिकात्मा च दाशार्हो दशषट्सुभुक् ।
दशप्रागाद्यङ्गुलीककरनम्रद्विडन्तकः ॥ ३९॥

दशब्राह्मणभेदज्ञो दशब्राह्मणभेदकृत् ।
दशब्राह्मणसम्पूज्यो दशनार्तिनिवारणः ॥ ४०॥

दोषज्ञो दोषदो दोषाधिपबंधुर्द्विषद्धरः ।
दोषैकदृक्पक्षघाती दष्टसर्पार्तिशामकः ॥ ४१॥

दधिक्राश्च दधिक्रावगामी दध्यङ्मुनीष्टदः ।
दधिप्रियो दधिस्नातो दधिपो दधिसिन्धुगः ॥ ४२॥

दधिभो दधिलिप्ताङ्गो दध्यक्षतविभूषणः ।
दधिद्रप्सप्रियो दभ्रवेद्यविज्ञातविग्रहः ॥ ४३॥

दहनो दहनाधारो दहरो दहरालयः ।
दहृदृग्दहराकाशो दहराच्छादनान्तकः ॥ ४४॥

दग्धभ्रमो दग्धकामो दग्धार्तिर्दग्धमत्सरः ।
दग्धभेदो दग्धमदो दग्धाधिर्दग्धवासनः ॥ ४५॥

दग्धारिष्टो दग्धकष्टो दग्धार्तिर्दग्धदुष्क्रियः ।
दग्धासुरपुरो दग्धभुवनो दग्धसत्क्रियः ॥ ४६॥

दक्षो दक्षाध्वरध्वंसी दक्षपो दक्षपूजितः ।
दाक्षिणात्यार्चितपदो दाक्षिणात्यसुभावगः ॥ ४७॥

दक्षिणाशो दक्षिणेशो दक्षिणासादिताध्वरः ।

दक्षिणार्पितसल्लोको दक्षवामादिवर्जितः ॥ ४८॥

दक्षिणोत्तरमार्गज्ञो दक्षिण्यो दक्षिणार्हकः ।
द्रुमाश्रयो द्रुमावासो द्रुमशायी द्रुमप्रियः ॥ ४९॥

द्रुमजन्मप्रदो द्रुस्थो द्रुरूपभवशातनः ।
द्रुमत्वगम्बरो द्रोणो द्रोणीस्थो द्रोणपूजितः ॥ ५०॥

द्रुघणी द्रुघणास्त्रश्च द्रुशिष्यो द्रुधर्मधृक् ।
द्रविणार्थो द्रविणदो द्रावणो द्राविडप्रियः ॥ ५१॥

द्रावितप्रणताघो द्राक्फलो द्राक्केन्द्रमार्गवित् ।
द्राघीय आयुर्दधानो द्राघीयान्द्राक्प्रसादकृत् ॥ ५२॥

द्रुततोषो द्रुतगतिव्यतीतो द्रुतभोजनः ।
द्रुफलाशी द्रुदलभुग्दृषद्वत्याप्लवादरः ॥ ५३॥

द्रुपदेड्यो द्रुतमतिर्द्रुतीकरणकोविदः ।
द्रुतप्रमोदो द्रुतिधृग्द्रुतिक्रीडाविचक्षणः ॥ ५४॥

दृढो दृढाकृतिर्दार्ढ्यो दृढसत्त्वो दृढव्रतः ।
दृढच्युतो दृढबलो दृढार्थासक्तिवारणः ॥ ५५॥

दृढधीर्दृढभक्तिदृग्दृढभक्तिवरप्रदः ।
दृढदृग्दृढभक्तिज्ञो दृढभक्तो दृढाश्रयः ॥ ५६॥

दृढदण्डो दृढयमो दृढप्रदो दृढाङ्गकृत् ।
दृढकायो दृढध्यानो दृढाभ्यासो दृढासनः ॥ ५७॥

दृग्दो दृग्दोषहरणो दृष्टि द्वंद्व विराजितः ।
दृक्पूर्वो दृऽग्मनोतीतो दृक्पूतगमनो दृगीट् ॥ ५८॥

दृगिष्टो दृष्ट्यविषमो दृष्टिहेतुर्दृष्टतनुः ।
दृग्लभ्यो दृक्त्रययुतो दृग्बाहुल्यविराजितः ॥ ५९॥

द्युपतिर्द्युपदृग्द्युस्थो द्युमणिर्द्युप्रवर्तकः ।
द्युदेहो द्युगमो द्युस्थो द्युभूर्द्युर्द्युलयो द्युमान् ॥ ६०॥

द्युनिड्गतिद्युतिद्यूनस्थानदोषहरो द्युभुक् ।
द्यूतकृद्द्यूतहृद्द्यूतदोषहृद्द्यूतदूरगः ॥ ६१॥

द्दप्तो द्दप्तार्दनो द्योस्थो द्योपालो द्योनिवासकृत् ।
द्रावितारिर्द्रावितात्पमृत्युर्द्रावितकैतवः ॥ ६२॥

द्यावाभूमिसंधिदर्शी द्यावाभूमिधरो द्युद्दक् ।
द्योकृद्द्योतहृद्द्योती द्योताक्षो द्योतदीपनः ॥ ६३॥

द्योतमूलो द्योतितात्मा द्योतोद्यौर्द्योतिताखिलः ।
द्वयवादिमतद्वेषी द्वयवादिमतान्तकः ॥ ६४॥

द्वयवादिविजयी दीक्षाद्वयवादिनिकृन्तनः ।
द्व्यष्टवर्षवया द्व्यष्टनृपवंद्यो द्विषट्क्रियः ॥ ६५॥

द्विषत्कलानिधिर्द्वीपिचर्मधृग्द्व्यष्टजातिकृत् ।
द्व्यष्टोपचारदयितो द्व्यष्टस्वरतनुर्द्विभित् ॥ ६६॥

द्व्यक्षराख्यो द्व्यष्टकोटिस्वजपीष्टार्थपूरकः ।
द्विपाद्व्यात्मा द्विगुर्द्वीशो द्व्यतीतो द्विप्रकाशकः ॥ ६७॥

द्वैतीभूतात्मको द्वैधीभूतचिद्द्वैधशामकः ।
द्विसप्तभुवनाधारो द्विसप्तभुवनेश्वरः ॥ ६८॥

द्विसप्तभुवनान्तस्थो द्विसप्तभुवनात्मकः ।
द्विसप्तलोककर्ता द्विसप्तलोकाधिपो द्विपः ॥ ६९॥

द्विसप्तविद्याभिज्ञो द्विसप्तविद्याप्रकाशकः ।
द्विसप्तविद्याविभवो द्विसप्तेन्द्रपदप्रदः ॥ ७०॥

द्विसप्तमनुमान्यश्च द्विसप्तमनुपूजितः ।
द्विसप्तमनुदेवो द्विसप्तमन्वन्तरर्धिकृत् ॥ ७१॥

द्विचत्वारिंशदुद्धर्ता द्विचत्वारिकलास्तुतः ।
द्विस्तनीगोरसास्पृग्द्विहायनीपालको द्विभुक् ॥ ७२॥

द्विसृष्टिर्द्विविधो द्वीड्यो द्विपथो द्विजधर्मकृत् ।
द्विजो द्विजातिमान्यश्च द्विजदेवो द्विजातिकृत् ॥ ७३॥

द्विजप्रेष्ठो द्विजश्रेष्ठो द्विजराजसुभूषणः ।
द्विजराजाग्रजो द्विड्द्वीड् द्विजाननसुभोजनः ॥ ७४॥

द्विजास्यो द्विजभक्तो द्विजातिभृद्द्विजसत्कृतः ।
द्विविधो द्व्यावृतिर्द्वंद्ववारणो द्विमुखादनः ॥ ७५॥

द्विजपालो द्विजगुरुर्द्विजराजासनो द्विपात् ।
द्विजिह्वसूत्रो द्विजिह्वफणछत्रो द्विजिह्वभत् ॥ ७६॥

द्वादशात्मा द्वापरदृग् द्वादशादित्यरूपकः ।
द्वादशीशो द्वादशारचक्रधृग् द्वादशाक्षरः ॥ ७७॥

द्वादशीपारणो द्वार्दश्यच्यो द्वादश षड्बलः ।
द्वासप्तति सहस्राङ्ग नाडीगति विचक्षणः ॥ ७८॥

द्वंद्वदो द्वंद्वदो द्वंद्वबीभत्सो द्वंद्वतापनः ।
द्वंद्वार्तिहृद् द्वंद्वसहो द्वया द्वंद्वातिगो द्विगः ॥ ७९॥

द्वारदो द्वारविद्द्वास्थो द्वारधृग् द्वारिकाप्रियः ।
द्वारकृद् द्वारगो द्वारनिर्गम क्रम मुक्तिगः ॥ ८०॥

द्वारभृद् द्वारनवकगतिसंसृतिदर्शकः ।
द्वैमातुरो द्वैतहीनो द्वैतारण्यविनोदनः ॥ ८१॥

द्वैतास्पृग् द्वैतगो द्वैताद्वैतमार्गविशारदः ।
दाता दातृप्रियो दावो दारुणो दारदाशनः ॥ ८२॥

दानदो दारुवसतिर्दास्यज्ञो दाससेवितः ।
दानप्रियो दानतोषो दानज्ञो दानविग्रहः ॥ ८३॥

दास्यप्रियो दासपालो दास्यदो दासतोषणः ।
दावोष्णहृद् दान्तसेव्यो दान्तज्ञो दान्त वल्लभः ॥ ८४॥

दातदोषो दातकेशो दावचारी च दावपः ।
दायकृद्दायभुग् दारस्वीकारविधिदर्शकः ॥ ८५॥

दारमान्यो दारहीनो दारमेधिसुपूजितः ।

दानवान् दानवारातिर्दानवाभिजनान्तकः ॥ ८६॥

दामोदरो दामकरो दारस्नेहोतचेतनः ।
दार्वीलेपो दारमोहो दारिकाकौतुकान्वितः ॥ ८७॥

दारिकादोद्धारकश्च दातदारुकसारथिः ।
दाहकृद्दाहशान्तिज्ञो दाक्षायण्यधिदैवतः ॥ ८८॥

द्रांबीजो द्रांमनुर्दान्तशान्तोपरतवीक्षितः ।
दिव्यकृद्दिव्यविद्दिव्यो दिविस्पृग् दिविजार्थदः ॥ ८९॥

दिक्पो दिक्पतिपो दिग्विद्दिगन्तरलुठद्यशः ।
दिग्दर्शनकरो दिष्टो दिष्टात्मा दिष्टभावनः ॥ ९०॥

दृष्टो दृष्टान्तदो दृष्टातिगो दृष्टान्तवर्जितः ।
दिष्टं दिष्टपरिच्छेदहीनो दिष्टनियामकः ॥ ९१॥

दिष्टास्पृष्टगतिर्दिष्टेड्दिष्टकृद्दिष्टचालकः ।
दिष्टदाता दिष्टहन्ता दुर्दिष्टफलशामकः ॥ ९२॥

दिष्टव्याप्तजगद्दिष्टशंसको दिष्टयत्नवान् ।
दितिप्रियो दितिस्तुत्यो दितिपूज्यो दितीष्टदः ॥ ९३॥

दितिपाखण्डदावो दिग्दिनचर्यापरायणः ।
दिगम्बरो दिव्यकांतिर्दिव्यगंधोऽपि दिव्यभुक् ॥ ९४॥

दिव्यभावो दीदिविकृद्दोषहृद्दीप्तलोचनः ।
दीर्घजीवी दीर्घदृष्टिर्दीर्घाङ्गो दीर्घबाहुकः ॥ ९५॥

दीर्घश्रवा दीर्घगतिर्दीर्घवक्षाश्च दीर्घपात् ।
दीनसेव्यो दीनबन्धुर्दीनपो दीपितान्तरः ॥ ९६॥

दीनोद्धर्ता दीप्तकान्तिर्दीप्रक्षुरसमायनः ।
दीव्यन् दीक्षितसम्पूज्यो दीक्षादो दीक्षितोत्तमः ॥ ९७॥

दीक्षणीयेष्टिकृद्दीक्षादीक्षाद्वयविचक्षणः ।
दीक्षाशी दीक्षितान्नाशी दीक्षाकृद्दीक्षितादरः ॥ ९८॥

दीक्षितार्थ्यो दीक्षिताशो दीक्षिताभीष्टपूरकः ।
दीक्षापटुर्दीक्षितात्मा दीग्यद्दीक्षितगर्वहृत् ॥ ९९॥

दुष्कर्महा दुष्कृतज्ञो दुष्कृद्दुष्कृतिपावनः ।
दुष्कृत्साक्षी दुष्कृतहृत् दुष्कृद्धा दुष्कृदार्तिदः ॥ १००॥

दुष्क्रियान्तो दुष्करकृद् दुष्क्रियाघनिवारकः ।
दुष्कुलत्याजको दुष्कृत्पावनो दुष्कुलान्तकः ॥ १०१॥

दुष्कुलाघहरो दुष्कृद्गतिदो दुष्करक्रियः ।
दुष्कलङ्कविनाशी दुष्कोपो दुष्कण्टकार्दनः ॥ १०२॥

दुष्कारी दुष्करतपा दुःखदो दुःखहेतुकः ।
दुःखत्रयहरो दुःखत्रयदो दुःखदुःखदः ॥ १०३॥

दुःखत्रयार्तिविद् दुःखिपूजितो दुःखशामकः ।
दुःखहीनो दुःखहीनभक्तो दुःखविशोधनः ॥ १०४॥

दुःखकृद् दुःखदमनो दुःखितारिश्च दुःखनुत् ।
दुःखातिगो दुःखलहा दुःखेटार्तिनिवारणः ॥ १०५॥

दुःखेटदृष्टिदोषघ्नो दुःखगारिष्टनाशकः ।
दुःखेचरदशार्तिघ्नो दुष्टखेटानुकूल्यकृत् ॥ १०६॥

दुःखोदर्काच्छादको दुःखोदर्कगतिसूचकः ।
दुःखोदर्कार्थसन्त्यागी दुःखोदर्कार्थदोषदृक् ॥ १०७॥

दुर्गा दुर्गार्तिहृद् दुर्गी दुर्गेशो दुर्गसंस्थितः ।
दुर्गमो दुर्गमगतिर्दुर्गारामश्च दुर्गभूः ॥ १०८॥

दुर्गानवकसम्पूज्यो दुर्गानवकसंस्तुतः ।
दुर्गभिद् दुर्गतिर्दुर्गमार्गगो दुर्गमार्थदः ॥ १०९॥

दुर्गतिघ्नो दुर्गतिदो दुर्ग्रहो दुर्ग्रहार्तिहृत् ।
दुर्ग्रहावेशहृद् दुष्टग्रहनिग्रहकारकः ॥ ११०॥

दुर्ग्रहोच्चाटको दुष्टग्रहजिद् दुर्गमादरः ।
दुर्दृष्टिबाधाशमनो दुर्दृष्टिभयहापकः ॥ १११॥

दुर्गुणो दुर्गुणातीतो दुर्गुणातीतवल्लभः ।
दुर्गन्धनाशो दुर्घातो दुर्घटो दुर्घटक्रियः ॥ ११२॥

दुश्चर्यो दुश्चरित्रारिर्दुश्चिकित्स्यगदान्तकः ।
दुश्चित्ताल्हादको दुश्चिच्छास्ता दुश्चेष्टशिक्षकः ॥ ११३॥

दुश्चिन्ताशमनो दुश्चिद्दुश्छन्दविनिवर्तकः ।
दुर्जयो दुर्जरो दुर्जिज्जयी दुर्जेयचित्तजित् ॥ ११४॥

दुर्जाप्यहर्ता दुर्वार्ताशान्तिर्दुर्जातिदोषहृत् ।
दुर्जनारिर्दुश्चवनो दुर्जनप्रान्तहापकः ॥ ११५॥

दुर्जनार्तो दुर्जनार्तिहरो दुर्जलदोषहृत् ।
दुर्जीवहा दुष्टहन्ता दुष्टार्तपरिपालकः ॥ ११६॥

दुष्टविद्रावणो दुष्टमार्गभिद् दुष्टसंगहृत् ।
दुर्जीवहत्यासंतोषो दुर्जनाननकीलनः ॥ ११७॥

दुर्जीववैरहृद् दुष्टोच्चाटको दुस्तरोद्धरः ।
दुष्टदण्डो दुष्टखण्डो दुष्टध्रुग् दुष्टमुंडनः ॥ ११८॥

दुष्टभावोपशमनो दुष्टविद् दुष्टशोधनः ।
दुस्तर्कहृद् दुस्तर्कारिर्दुस्तापपरिशान्तिकृत् ॥ ११९॥

दुर्दैवहृद् दुन्दुभिघ्नो दुन्दुभ्याघातहर्षकृत् ।
दुर्धीहरो दुर्नयहृद्दुःपक्षिध्वनिदोषहृत् ॥ १२०॥

दुष्प्रयोगोपशमनो दुष्प्रतिग्रहदोषहृत् ।
दुर्बलाप्तो दुर्बोधात्मा दुर्बन्धच्छिद्दुरत्ययः ॥ १२१॥

दुर्बाधाहृद् दुर्भयहृद् दुर्भ्रमोपशमात्मकः ।
दुर्भिक्षहृद्दुर्यशोहृद् दुरुत्पातोपशामकः ॥ १२२॥

दुर्मन्त्रयन्त्रतन्त्रच्छिद् दुर्मित्रपरितापनः ।
दुर्योगहृद् दुराधर्षो दुराराध्यो दुरासदः ॥ १२३॥

दुरत्ययस्वमायाब्धि तारको दुरवग्रहः ।

दुर्लभो दुर्लभतमो दुरालापाघशामकः ॥ १२४॥

दुर्नामहृद् दुराचारपावनो दुरपोहनः ।
दुराश्रमाघहृद्दुर्गपथलभ्यचिदात्मकः ॥ १२५॥

दुरध्वपारदो दुर्भुक्पावनो दुरितार्तिहा ।
दुराश्लेषाघहर्ता दुर्मैथुनैनोनिबर्हणः ॥ १२६॥

दुरामयान्तो दुर्वैरहर्ता दुर्व्यसनान्तकृत् ।
दुःसहो दुःशकुनहृद् दुःशीलपरिवर्तनः ॥ १२७॥

दुःशोकहृद् दुःशऽग्काहृद्दुःसङ्गभयवारणः ।
दुःसहाभो दुःसहदृग्दुःस्वप्नभयनाशनः ॥ १२८॥

दुःसंगदोषसऽज्जातदुर्मनीषाविशोधनः ।
दुःसङ्गिपापदहनो दुःक्षणाघनिवर्तनः ॥ १२९॥

दुःक्षेत्रपावनो दुःक्षुद् भयहृद्दुःक्षयार्तिहृत् ।
दुःक्षत्रहृच्च दुर्ज्ञेयो दुर्ज्ञानपरिशोधनः ॥ १३०॥

दूतो दूतेरको दूतप्रियो दूरश्च दूरदृक् ।
दूनचित्ताल्हादकश्च दूर्वाभो दूष्यपावनः ॥ १३१॥

देदीप्यमाननयनो देवो देदीप्यमानभः ।
देदीप्यमानरदनो देश्यो देदीप्यमानधीः ॥ १३२॥

देवेष्टो देवगो देवी देवता देवतार्चितः ।
देवमातृप्रियो देवपालको देववर्धकः ॥ १३३॥

देवमान्यो देववन्द्यो देवलोकप्रियंवदः ।
देवारिष्टहरो देवाभीष्टदो देवतात्मकः ॥ १३४॥

देवभक्तप्रियो देवहोता देवकुलादृतः ।
देवतन्तुर्देवसम्पद्देवद्रोहिसुशिक्षकः ॥ १३५॥

देवात्मको देवमयो देवपूर्वश्च देवभूः ।
देवमार्गप्रदो देवशिक्षको देवगर्वहृत् ॥ १३६॥

देवमार्गान्तरायघ्नो देवयज्ञादिधर्मधृक् ।
देवपक्षी देवसाक्षी देवदेवेशभास्करः ॥ १३७॥

देवारातिहरो देवदूतो दैवतदैवतः ।
देवभीतिहरो देवगेयो देवहविर्भुजः ॥ १३८॥

देवश्राव्यो देवदृश्यो देवर्णी देवभोग्यभुक् ।
देवीशो देव्यभीष्टार्थो देवीड्यो देव्यभीष्टकृत् ॥ १३९॥

देवीप्रियो देवकीजो देशिको देशिकार्चितः ।
देशिकेड्यो देशिकात्मा देवमातृकदेशपः ॥ १४०॥

देहकृद्देहधृग्देही देहगो देहभावनः ।
देहपो देहदो देहचतुष्टयविहारकृत् ॥ १४१॥

देहीतिप्रार्थनीयश्च देहबीजनिकृन्तनः ।
देवनास्पृग्देवनकृद्देहास्पृग्देहभावनः ॥ १४२॥

देवदत्तो देवदेवो देहातीतोऽपि देहभृत् ।
देहदेवालयो देहासङ्गो देहरथेष्टगः ॥ १४३॥

देहधर्मा देहकर्मा देहसंबन्धपालकः ।
देयात्मा देयविद्देशापरिच्छिन्नश्च देशकृत् ॥ १४४॥

देशपो देशवान् देशी देशज्ञो देशिकागमः ।
देशभाषापरिज्ञानी देशभूर्देशपावनः ॥ १४५॥

देश्यपूज्यो देवकृतोपसर्गनिवर्तकः ।
दिविषद्विहितावर्षातिवृष्ट्यादीतिशामकः ॥ १४६॥

दैवीगायत्रिकाजापी दैवसम्पत्तिपालकः ।
दैवीसम्पत्तिसम्पन्नमुक्तिकृद्दैवभावगः ॥ १४७॥

दैवसम्पत्त्यसम्पन्नछायास्पृग्दैत्यभावहृत् ।
दैवदो दैवफलदो दैवादित्रिक्रियेश्वरः ॥ १४८॥

दैवानुमोदनो दैन्यहरो दैवज्ञदेवतः ।
दैवज्ञो दैववित्पूज्यो दैविको दैन्यकारणः ॥ १४९॥

दैन्याञ्जनहृतस्तंभो दोषत्रयशमप्रदः ।
दोषहर्ता दैवभिषग्दोषदो दोर्द्वयान्वितः ॥ १५० ॥

दोषज्ञो दोहदाशंसी दोग्धा दोष्यन्तितोषितः ।
दौरात्म्यदूरो दौरात्म्यहृद्दौरात्म्यार्तिशान्तिकृत् ॥ १५१ ॥

दौरात्म्यदोषसंहर्ता दौरात्म्यपरिशोधनः ।
दौर्मनस्यहरो दौत्यकृद्दौत्योपास्तशक्तिकः ॥ १५२ ॥

दौर्भाग्यदोऽपि दौर्भाग्यहृद्दौर्भाग्यार्तिशान्तिकृत् ।
दौष्ट्यत्रो दौष्कुल्यदोषहृद्दौष्कुल्याधिशामकः ॥ १५३ ॥

दंदशूकपरिष्कारो दंदशूककृतायुधः ।
दन्तिचर्मपरिधानो दन्तुरो दन्तुरारिहृत् ॥ १५४ ॥

दन्तुरघ्नो दण्डधारी दण्डनीतिप्रकाशकः ।
दांपत्यार्थप्रदो दंर्पत्यच्यो दंपत्यभीष्टदः ॥ १५५ ॥

दंपतिद्वेषशमनो दंपतिप्रीतिवर्धनः ।
दन्तोलूखलको दंष्ट्री दन्त्यास्यो दन्तिपूर्वगः ॥ १५६ ॥

दंभोलिभृद्दंभहर्ता दंड्यविद्दंशवारणः ।
दन्द्रम्यमाणशरणो दन्त्यश्वरथपत्तिदः ॥ १५७ ॥

दन्द्रम्यमाणलोकार्तिकरो दण्ड त्रयाश्रितः ।
दण्डपाण्यर्चपद्दण्डि वासुदेवस्तुतोऽवतु ॥ १५८ ॥

इति श्रीमद्दकारादि दत्तनाम सहस्रकं ।
पठतां शृण्वतां वापि परानन्दपदप्रदम् ॥ १५९ ॥

॥ इति श्री परम पूज्य परमहंस परिव्राजकाचार्य
श्री श्री श्री मद्वासुदेवानन्द सरस्वती यति वरेण्य
विरचित दकारादि दत्त सहस्रनामस्तोत्रम् ॥

निखिलागमतत्त्वज्ञ ब्रह्मज्ञानपरायण ।
वदास्माकं मुक्त्युपायं सूत सर्वोपकारकम् ॥ १॥

सर्वदेवेषु को देवः सद्यो मोक्षप्रदो भवेत् ।
को मनुर्वा भवेत्तस्य सद्यः प्रीतिकरो ध्रुवम् ॥ २॥

सूत उवाच -
निगमागमतत्त्वज्ञो ह्यवधूतश्चिदम्बरः ।
भक्तवात्सल्यप्रवणो दत्त एव हि केवलः ॥ ३॥

सदा प्रसन्नवदनो भक्तचिन्तैकतत्परः ।
तस्य नामान्यनन्तानि वर्तन्तेऽथाप्यदः परम् ॥ ४॥

दत्तस्य नामसाहस्रं तस्य प्रीतिविवर्धनम् ।
यस्त्विदं पठते नित्यं दत्तात्रेयैकमानसः ॥ ५॥

मुच्यते सर्वपापेभ्यः स सस्द्यो नात्र संशयः ।
अन्ते तद्धाम संयाति पुनरावृत्तिदुर्लभम् ॥ ६॥

(अस्य श्रीमद्दत्तात्रेयसहस्रनामकस्य तु ।
ऋषिर्ब्रह्म विनिरिर्दिष्टोनुष्टुप्छन्दं प्रकीर्तिम् ॥

दत्तात्रेयोऽस्यदेवता दत्तात्रेयात्मतारकम् ।
दाकारंरेफसंयुक्तं दत्तबीजमुदाहृतम् ॥

द्रामित्यादि त्रिभिः प्रोक्तं बीजं शक्तिश्च कीलकम् ।
षाअॅऊघर्फु? बीजसंयुक्तैं षडङ्गन्यास ईरितः ॥ ??
पीताम्बरालङ्कृत पृष्ठभागं भस्मावगुण्ठामलरुक्मदेहम् ।
विद्युत्रभापिङ्गजटाभिरामं श्रीदत्तयोगीशमहं भजामि ॥)

अस्य श्रीमद्दत्तात्रेयसहस्रनामस्तोत्रमन्त्रस्य अवधूत ऋषिः ।
अनुष्टुप्छन्दः । दिगम्बरो देवता । ॐ बीजम् । ह्रीं शक्तिः ।
क्रौं कीलकम् । श्रीदत्तात्रेयप्रीत्यर्थे जपे विनियोगः ॥

अथ ध्यानम् -
दिगम्बरं भस्मविलेपिताङ्गं बोधात्मकं मुक्तिकरं पर्सन्नम् ।

निर्मानसं श्यामतनुं भजेऽहं दत्तात्रेयं ब्रह्मसमाधियुक्तम् ॥

अथ सहस्रनामस्तोत्रम् ।
दत्तात्रेयो महोयोगी योगेशश्चामरप्रभुम् ।
मुनिर्दिगम्बरो बालो मायामुक्तो मदापहः ॥ १॥

अवधूतो महानाथः शङ्करोऽमरवल्लभः ।
महादेवश्चादिदेवः पुराणप्रभुरीश्वरः ॥ २॥

सत्त्वकृत्सत्त्वभृद्भावः सत्त्वात्मा सत्त्वसागरः ।
सत्त्ववित्सत्त्वसाक्षी च सत्त्वसाध्योऽमराधिपः ॥ ३॥

भूतकृद्भूतभृच्चैव भूतात्मा भूतसम्भवः ।
भूतभावो भवो भूतवित्तथा भूतकारणः ॥ ४॥

भूतसाक्षी प्रभूतिश्च भूतानां परमा गतिः ।
भूतसङ्गविहीनात्मा भूतात्मा भूतशङ्करः ॥ ५॥

भूतनाथो महानाथश्चादिनाथो महेश्वरः ।
सर्वभूतनिवासात्मा भूतसन्तापनाशनः ॥ ६॥

सर्वात्मा सर्वभृत्सर्वः सर्वज्ञः सर्वनिर्णयः ।
सर्वसाक्षी बृहद्भानुः सर्ववित्सर्वमङ्गलः ॥ ७॥

शान्तः सत्यः समः पूर्णो ह्येकाकी कमलापतिः ।
रामो रामप्रियश्चैव विरामो रामकारणम् ॥ ८॥

शुद्धात्मा पावनोऽनन्तः प्रतीतः परमार्थभृत् ।
हंससाक्षी विभुश्चैव प्रभुः प्रलय इत्यपि ॥ ९॥

सिद्धात्मा परमात्मा च सिद्धानां परमा गतिः ॥

सिद्धिसिद्धस्तथा साध्यः साधनो ह्युत्तमस्तथा ॥ १०॥

सुलक्षणः सुमेधावी विद्यावान्विगतान्तरः ।
विज्वरश्च महाबाहुर्बहुलानन्दवर्धनः ॥ ११॥

अव्यक्तपुरुषः प्राज्ञः परज्ञः परमार्थदृक् ।

परापरविनिर्मुक्तो युक्तस्तत्त्वप्रकाशवान् ॥ १२॥

दयावान्भगवान्भावी भावात्मा भावकारणः ।
भवसन्तापनाशश्च पुष्पवान्पण्डितो बुधः ॥ १३॥

प्रत्यक्षवस्तुर्विश्वात्मा प्रत्यग्ब्रह्म सनातनः ।
प्रमाणविगतश्चैव प्रत्याहारनियोजकः ॥ १४॥

प्रणवः प्रणवातीतः प्रमुखः प्रलयात्मकः ।
मृत्युञ्जयो विविक्तात्मा शङ्करात्मा परो वपुः ॥ १५॥

परमस्तनुविज्ञेयः परमात्मनि संस्थितः ।
प्रबोधकलनाधारः प्रभावप्रवरोत्तमः ॥ १६॥

चिदम्बरश्चिद्विलासश्चिदाकाशश्चिदुत्तमः ।
चित्तचैतन्यचित्तात्मा देवानां परमा गतिः ॥ १७॥

अचेत्यश्चेतनाधारश्चेतनाचित्तविक्रमः ।
चित्तात्मा चेतनारूपो लसत्पङ्कजलोचनः ॥ १८॥

परब्रह्म परं ज्योतिः परं धाम परन्तपः ।
परं सूत्रं परं तन्त्रं पवित्रं परमोहवान् ॥ १९॥

क्षेत्रज्ञः क्षेत्रगः क्षेत्रः क्षेत्राधारः पुरञ्जनः ।
क्षेत्रशून्यो लोकसाक्षी क्षेत्रवान्बहुनायकः ॥ २०॥

योगेन्दो योगपूज्यश्च योग आत्मविदां शुचिः ।
योगमायाधरः स्थाणुरचलः कमलापतिः ॥ २१॥

योगेशो योगनिर्माता योगज्ञानप्रकाशनः ।
योगपालो लोकपालः संसारतमनाशनः ॥ २२॥

गुह्यो गुह्यतमो गुप्तो मुक्तो युक्तः सनातनः ।
गहनो गगनाकारो गम्भीरो गणनायकः ॥ २३॥

गोविन्दो गोपतिर्गोप्ता गोभागो भावसंस्थितः ।
गोसाक्षी गोतमारिश्च गान्धारो गगनाकृतिः ॥ २४॥

योगयुक्तो भोगयुक्तः शङ्कामुक्तसमाधिमान् ।
सहजः सकलेशानः कार्तवीर्यवरप्रदः ॥ २५॥

सरजा विरजाः पुंसो पावनः पापनाशनः । पुमान्
परावरविनिर्मुक्तः परञ्ज्योतिः पुरातनः ॥ २६॥

नानाज्योतिरनेकात्मा स्वयञ्ज्योतिः सदाशिवः ।
दिव्यज्योतिर्मयश्चैव सत्यविज्ञानभास्करः ॥ २७॥

नित्यशुद्धः परः पूर्णः प्रकाशः प्रकटोद्भवः ।
प्रमादविगतश्चैव परेशः परविक्रमः ॥ २८॥

योगी योगो योगपश्च योगाभ्यासप्रकाशनः ।
योक्ता मोक्ता विधाता च त्राता पाता निरायुध्यः ॥ २९॥

नित्यमुक्तो नित्ययुक्तः सत्यः सत्यपराक्रमः ।
सत्त्वशुद्धिकरः सत्त्वस्तथा सत्त्वम्भृतां गतिः ॥ ३०॥

श्रीधरः श्रीवपुः श्रीमान् श्रीनिवासोऽमरार्चितः ।
श्रीनिधिः श्रीपतिः श्रेष्ठः श्रेयस्कश्चरमाश्रयः ॥ ३१॥

त्यागी त्यागार्थसम्पन्नस्त्यागात्मा त्यागविग्रहः ।
त्यागलक्षणसिद्धात्मा त्यागज्ञस्त्यागकारणः ॥ ३२॥

भोगो भोक्ता तथा भोग्यो भोगसाधनकारणः ।
भोगी भोगार्थसम्पन्नो भोगज्ञानप्रकाशनः ॥ ३३॥

केवलः केशवः कृष्णः कंवासाः कमलालयः ।
कमलासनपूज्यश्च हरिरज्ञानखण्डनः ॥ ३४॥

महात्मा महदादिश्च महेशोत्तमवन्दितः ।
मनोबुद्धिविहीनात्मा मानात्मा मानवाधिपः ॥ ३५॥

भुवनेशो विभूतिश्च धृतिर्मेधा स्मृतिर्दया ।
दुःखदावानलो बुद्धः प्रबुद्धः परमेश्वरः ॥ ३६॥

कामहा क्रोधहा चैव दम्भदर्पमदापहः ।
अज्ञानपतिमिरारिश्च भवारिर्भुवनेश्वरः ॥ ३७॥

रूपकृद्रूपभृद्रूपी रूपात्मा रूपकारणः ।
रूपज्ञो रूपसाक्षी च नामरूपो गुणान्तकः ॥ ३८॥

अप्रमेयः प्रमेयश्च प्रमाणं प्रणवाश्रयः ।
प्रमाणरहितोऽचिन्त्यश्चेतनाविगतोऽजरः ॥ ३९॥

अक्षरोऽक्षरमुक्तश्च विज्वरो ज्वरनाशनः ।
विशिष्टो वित्तशास्त्री च दृष्टो दृष्टान्तवर्जितः ॥ ४०॥

गुणेशो गुणकायश्च गुणात्मा गणभावनः ।
अनन्तगुणसम्पन्नो गुणगर्भो गुणाधिपः ॥ ४१॥

गणेशो गुणनाथश्च गुणात्मा गणभावनः ।
गणबन्धुर्विवेकात्मा गुणयुक्तः पराक्रमी ॥ ४२॥

अतर्क्यः क्रतुरग्निश्च कृतज्ञः सफलाश्रयः ।
यज्ञश्च यज्ञफल्दो यज्ञ इज्योऽमरोत्तमः ॥ ४३॥

हिरण्यगर्भः श्रीगर्भः खगर्भः कुणपेश्वरः ।
मायागर्भो लोकगर्भः स्वयम्भूर्भुवनान्तकः ॥ ४४॥

निष्पापो निबिडो नन्दी बोधी बोधसमाश्रयः ।
बोधात्मा बोधनात्मा च भेदवैतण्डखण्डनः ॥ ४५॥

स्वाभाव्यो भावनिर्मुक्तो व्यक्तोऽव्यक्तसमाश्रयः ।
नित्यतृप्तो निराभासो निर्वाणः शरणः सुहृत् ॥ ४६॥

गुह्येशो गुणगम्भीरो गुणदोषनिवारणः ।
गुणसङ्गविहीनश्च योगारेर्दर्पनाशनः ॥ ४७॥

आनन्दः परमानन्दः स्वानन्दसुखवर्धनः ।
सत्यानन्दश्चिदानन्दः सर्वानन्दपरायणः ॥ ४८॥

सद्रूपः सहजः सत्यः स्वानन्दः सुमनोहरः ।
सर्वः सर्वान्तरश्चैव पूर्वात्पूर्वतरस्तथा ॥ ४९॥

खमयः खपरः खादिः खम्ब्रह्म खतनुः खगः ।

खवासाः खविहीनश्च खनिधिः खपराश्रयः ॥ ५०॥

अनन्तश्चादिरूपश्च सूर्यमण्डलमध्यगः ।
अमोघः परमामोघः परोक्षः वरदः कविः ॥ ५१॥

विश्वचक्षुर्विश्वसाक्षी विश्वबाहुर्धनेश्वरः ।
धनञ्जयो महातेजास्तेजिष्ठस्तैजसः सुखी ॥ ५२॥

ज्योतिर्ज्योतिर्मयो जेता ज्योतिषां ज्योतिरात्मकः ।
ज्योतिषामपि ज्योतिश्च जनको जनमोहनः ॥ ५३॥

जितेन्द्रियो जितक्रोधो जितात्मा जितमानसः ।
जितसङ्गो जितप्राणो जितसंसारवासनः ॥ ५४॥

निर्वासनो निरालम्बो निर्योगक्षेमवर्जितः ।
निरीहो निरहङ्कारो निराशीर्निरुपाधिकः ॥ ५५॥

नित्यबोधो विविक्तात्मा विशुद्धोत्तमगौरवः ।
विद्यार्थी परमार्थी च श्रद्धार्थी साधनात्मकः ॥ ५६॥

प्रत्याहारी निराहारी सर्वाहारपरायणः ।
नित्यशुद्धो निराकाङ्क्षी पारायणपरायणः ॥ ५७॥

अणोरणुतरः सूक्ष्मः स्थूलः स्थूलतरस्तथा ।
एकस्तथाऽनेकरूपो विश्वरूपः सनातनः ॥ ५८॥

नैकरूपो विरूपात्मा नैकबोधमयोऽपि च ।
नैकनाममयश्चैव नैकविद्याविवर्धनः ॥ ५९॥

एकश्चैकान्तिकश्चैव नानाभावविवर्जितः ।
एकाक्षरस्तथा बीजः पूर्णबिम्बः सनातनः ॥ ६०॥

मन्त्रवीर्यो मन्त्रबीजः शास्त्रवीर्यो जगत्पतिः ।
नानावीर्यधरश्चैव शक्रेशः पृथिवीपतिः ॥ ६१॥

प्राणेशः प्राणदः प्राणः प्राणायामपरायणः ।
प्राणपञ्चकनिर्मुक्तः कोशपञ्चकवर्जितः ॥ ६२॥

निश्चलो निष्कलोऽसङ्गो निष्प्रपञ्चो निरामयः ।
निराधारो निराकारो निर्विकारो निरञ्जनः ॥ ६३॥

निष्प्रतीतो निराभासो निरासक्तो निराकुलः ।
निष्ठासर्वगतश्चैव निरारम्भो निराश्रयः ॥ ६४॥

निरन्तरः सत्त्वगोप्ता शान्तो दान्तो महामुनिः ।
निःशब्दः सुकृतः स्वस्थः सत्यवादी सुरेश्वरः ॥ ६५॥

ज्ञानदो ज्ञानविज्ञानी ज्ञानात्माऽऽनन्दपूरितः ।
ज्ञानयज्ञविदां दक्षो ज्ञानाग्निर्ज्वलनो बुधः ॥ ६६॥

दयावान्भवरोगारिश्चिकित्साचरमागतिः ।
चन्द्रमण्डलमध्यस्थश्चन्द्रकोटिसुशीतलः ॥ ६७॥

यन्तकृत्परमो यन्त्री यन्त्रारूढपराजितः ।
यन्त्रविद्यन्त्रवासश्च यन्त्राधारो धराधरः ॥ ६८॥

तत्त्वज्ञस्तत्त्वभूतात्मा महत्तत्त्वप्रकाशनः ।
तत्त्वसङ्ख्यानयोगज्ञः साङ्ख्यशास्त्रप्रवर्तकः ॥ ६९॥

अनन्तविक्रमो देवो माधवश्च धनेश्वरः ।
साधुः साधुवरिष्ठात्मा सावधानोऽमरोत्तमः ॥ ७०॥

निःसङ्कल्पो निराधारो दुर्धरो ह्यात्मवित्पतिः ।
आरोग्यसुखदश्चैव प्रवरो वासवस्तथा ॥ ७१॥

परेशः परमोदारः प्रत्यक्चैतन्यदुर्गमः ।
दुराधर्षो दुरावासो दूरत्वपरिनाशनः ॥ ७२॥

वेदविद्वेदकृद्वेदो वेदात्मा विमलाशयः ।
विविक्तसेवी च संसारश्रमनाशनस्तथा ॥ ७३॥

ब्रह्मयोनिर्बृहद्योनिर्विश्वयोनिर्विदेहवान् ।
विशालाक्षो विश्वनाथो हाटकाङ्गदभूषणः ॥ ७४॥

अबाध्यो जगदाराध्यो जगदार्जवपालनः ।
जनवान्धनवान्धर्मी धर्मगो धर्मवर्धनः ॥ ७५॥

अमृतः शाश्वतः साद्यः सिद्धिदः सुमनोहरः ।
खलुब्रह्मखलुस्थानो मुनीनां परमा गतिः ॥ ७६॥

उपद्रष्टा तथा श्रेष्ठः शुचिर्भूतो ह्यनामयः ।
वेदसिद्धान्तवेद्यश्च मानसाह्लादवर्धनः ॥ ७७॥

देहदन्यो गुणादन्यो लोकादन्यो विवेकवित् ।
दुष्टस्वप्नहरश्चैव गुरुर्गुरुवरोत्तमः ॥ ७८॥

कर्मी कर्मविनिर्मुक्तः संन्यासी साधकेश्वरः ।
सर्वभावविहीनश्च तृष्णासङ्गनिवारकः ॥ ७९॥

त्यागी त्यागवपुस्त्यागस्त्यागदानविवर्जितः ।
त्यागकारणत्यागात्मा सद्गुरुः सुखदायकः ॥ ८०॥

दक्षो दक्षादिवन्द्यश्च ज्ञानवादप्रवर्तकः ।
शब्दब्रह्ममयात्मा च शब्दब्रह्मप्रकाशवान् ॥ ८१॥

ग्रसिष्णुः प्रभविष्णुश्च सहिष्णुर्विगतान्तरः ।
विद्वत्तमो महावन्द्यो विशालोत्तमवाङ्मुनिः ॥ ८२॥

ब्रह्मविद्ब्रह्मभावश्च ब्रह्मर्षिर्ब्राह्मणप्रियः ।
ब्रह्म ब्रह्मप्रकाशात्मा ब्रह्मविद्याप्रकाशनः ॥ ८३॥

अत्रिवंशप्रभूतात्मा तापसोत्तमवन्दितः ।
आत्मवासी विधेयात्मा ह्यत्रिवंशविवर्धनः ॥ ८४॥

प्रवर्तनो निवृत्तात्मा प्रलयोदकसन्निभः ।
नारायणो महागर्भो भार्गवप्रियकृत्तमः ॥ ८५॥

सङ्कल्पदुःखदलनः संसारतमनाशनः ।
त्रिविक्रमस्त्रिधाकारस्त्रिमूर्तिस्त्रिगुणात्मकः ॥ ८६॥

भेदत्रयहरश्चैव तापत्रयनिवारकः ।
दोषत्रयविभेदी च संशयार्णवखण्डनः ॥ ८७॥

असंशयस्त्वसम्मूढो ह्यवादी राजनन्दितः ।

राजयोगी महायोगी स्वभावगलितस्तथा ॥ ८८॥

पुण्यश्लोकः पवित्राङ्घ्रिर्ध्यानयोगपरायणः ।
ध्यानस्थो ध्यानगम्यश्च विधेयात्मा पुरातनः ॥ ८९॥

अविज्ञेयो ह्यन्तरात्मा मुख्यबिम्बसनातनः ।
जीवसञ्जीवनो जीवश्चिद्विलासश्चिदाश्रयः ॥ ९०॥

महेन्द्रोऽमरमान्यश्च योगेन्द्रो योगवित्तमः ।
योगधर्मस्तथा योगस्तत्त्वस्तत्त्वविनिश्चयः ॥ ९१॥

नैकबाहुरनन्तात्मा नैकनामपराक्रमः ।
नैकाक्षी नैकपादश्च नाथनाथोत्तमोत्तमः ॥ ९२॥

सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ।
सहस्ररूपदृक्चैव सहस्रारमयोद्भवः ॥ ९३॥

त्रिपादपुरुषश्चैव त्रिपादूर्ध्वस्तथैव च ।
त्र्यम्बकश्च महावीर्यो योगवीर्यविशारदः ॥ ९४॥

विजयी विनयी जेता वीतरागी विराजितः ।
रुद्रो रौद्रो महाभीमः प्राज्ञमुख्यः सदाशुचिः ॥ ९५॥

अन्तर्ज्योतिरनन्तात्मा प्रत्यगात्मा निरन्तरः ।
अरूपश्चात्मरूपश्च सर्वभावविनिर्वृतः ॥ ९६॥

अन्तः शून्यो बहिः शून्यः शून्यात्मा शून्यभावनः ।
अन्तःपूर्णो बहिःपूर्णः पूर्णात्मा पूर्णभावनः ॥ ९७॥

अन्तस्त्यागी बहिस्त्यागी त्यागात्मा सर्वयोगवान् ।
अन्तर्यागी बहिर्यागी सर्वयोगपरायणः ॥ ९८॥

अन्तर्भोगी बहिर्भोगी सर्वभोगविदुत्तमः ।
अन्तर्निष्ठो बहिर्निष्ठः सर्वनिष्ठामयस्तथा ॥ ९९॥

बाह्यान्तरविमुक्तश्च बाह्यान्तरविवर्जितः ।
शान्तः शुद्धो विशुद्धश्च निर्वाणः प्रकृतेः परः ॥ १००॥

अकालः कालनेमी च कालकालो जनेश्वरः ।
कालात्मा कालकर्ता च कालज्ञः कालनाशनः ॥ १०१॥

कैवल्यपददाता च कैवल्यसुखदायकः ।
कैवल्यकलनाधारो निर्भरो हर्षवर्धनः ॥ १०२॥

हृदयस्थो हृषीकेशो गोविन्दो गर्भवर्जितः ।
सकलागमपूज्यश्च निगमो निगमाश्रयः ॥ १०३॥

पराशक्तिः पराकीर्तिः परावृत्तिर्निधिस्मृतिः ।
पराविद्या पराक्षान्तिर्विभक्तिर्युक्तसद्गतिः ॥ १०४॥

स्वप्रकाशः प्रकाशात्मा परसंवेदनात्मकः ।
स्वसेव्यः स्वविदां स्वात्मा स्वसंवेद्योऽनघः क्षमी ॥ १०५॥

स्वानुसन्धानशीलात्मा स्वानुसन्धानगोचरः ।
स्वानुसन्धानशून्यात्मा स्वानुसन्धानाश्रयस्तथा ॥ १०६॥

स्वबोधदर्पणोऽभङ्गः कन्दर्पकुलनाशनः ।
ब्रह्मचारी ब्रह्मवेत्ता ब्राह्मणो ब्रह्मवित्तमः ॥ १०७॥

तत्त्वबोधः सुधावर्षः पावनः पापपावकः ।
ब्रह्मसूत्रविधेयात्मा ब्रह्मसूत्रार्धनिर्णयः ॥ १०८॥

आत्यन्तिको महाकल्पः सङ्कल्पावर्तनाशनः ।
आधिव्याधिहरश्चैव संशयार्णवशोषकः ॥ १०९॥

तत्त्वात्मज्ञानसन्देशो महानुभवभावितः ।
आत्मानुभवसम्पन्नः स्वानुभावसुखाश्रयः ॥ ११०॥

अचिन्त्यश्च बृहद्भानुः प्रमदोत्कर्षनाशनः ।
अनिकेतप्रशान्तात्मा शून्यवासो जगद्वपुः ॥ १११॥

चिद्गतिश्चिन्मयश्चक्री मायाचक्रप्रवर्तकः ।
सर्ववर्णविदारम्भी सर्वारम्भपरायणः ॥ ११२॥

पुराणः प्रवरो दाता सुन्दरः कनकाङ्गदी ।
अनिसूयात्मजो दत्तः सर्वज्ञः सर्वकामदः ॥ ११३॥

कामजित्कामपालश्च कामी कामप्रदागमः ।
कामवान्कामपोषश्च सर्वकामनिवर्तकः ॥ ११४॥

सर्वकर्मफलोत्पत्तिः सर्वकामफलप्रदः ।
सर्वकर्मफलैः पूज्यः सर्वकर्मफलाश्रयः ॥ ११५॥

विश्वकर्मा कृतात्मा च कृतज्ञः सर्वसाक्षिकः ।
सर्वारम्भपरित्यागी जडोन्मत्तपिशाचवान् ॥ ११६॥

भिक्षुर्भिक्षाकरश्चैव भैक्षाहारी निराश्रमी ।
अकूलश्चानुकूलश्च विकलो ह्यकलस्तथा ॥ ११७॥

जटिलो वनचारी च दण्डी मुण्डी च गण्डवान् ।
देहधर्मविहीनात्मा ह्येकाकी सङ्गवर्जितः ॥ ११८॥

आश्रम्यनाश्रमारम्भोऽनाचारी कर्मवर्जितः ।
असन्देही च सन्देही न किञ्चिन्न च किञ्चनः ॥ ११९॥

नृदेही देहशून्यश्च नाभावी भावनिर्गतः ।
नाब्रह्मच परब्रह्म स्वयमेव निराकुलः ॥ १२०॥

अनघश्चागुरुश्चैव नाथनाथोत्तमो गुरुः ।
द्विभुजः प्राकृतश्चैव जनकश्च पितामहः ॥ १२१॥

अनात्मा न च नानात्मा नीतिर्नीतिमतां वरः ।
सहजः सदृशः सिद्धश्चैकश्चिन्मात्र एव च ॥ १२२॥

न कर्तापि च कर्ता च भोक्ता भोगविवर्जितः ।
तुरीयस्तुरीयातीतः स्वच्छः सर्वमयस्तथा ॥ १२३॥

सर्वाधिष्ठानरूपश्च सर्वध्येयविवर्जितः ।
सर्वलोकनिवासात्मा सकलोत्तमवन्दितः ॥ १२४॥

देहभृद्देहकृच्चैव देहात्मा देहभावनः ।
देही देहविभक्तश्च देहभावप्रकाशनः ॥ १२५॥

लयस्थो लयविच्चैव लयाभावश्च बोधवान् ।

लयातीतो लयस्यान्तो लयभावनिवारणः ॥ १२६॥

विमुखः प्रमुखश्चैव प्रत्यङ्मुखवदाचरी ।
विश्वभुग्विश्वधृग्विश्वो विश्वक्षेमकरस्तत्जा ॥ १२७॥

अविक्षिप्तोऽप्रमादी च परर्द्धिः परमार्थदृक् ।
स्वानुभावविहीनश्च स्वानुभावप्रकाशनः ॥ १२८॥

निरिन्द्रियश्च निर्बुद्धिर्निराभासो निराकृतः ।
निरहङ्कारश्चरूपात्मा निर्वपुः सकलाश्रयः ॥ १२९॥

शोकदुःखहरश्चैव भोगमोक्षफलप्रदः ।
सुप्रसन्नस्तथा सूक्ष्मः शब्दब्रह्मार्थसङ्ग्रहः ॥ १३०॥

आगमापायशून्यश्च स्थानदश्च सताङ्गतिः ।
अकृतः सुकृतश्चैव कृतकर्मा विनिर्वृतः ॥ १३१॥

भेदत्रयवरश्चैव देहत्रयविनिर्गतः ।
सर्वकाममयश्चैव सर्वकामनिवर्तकः ॥ १३२॥

सिद्धेश्वरोऽजरः पञ्चबाणदर्पहुताशनः ।
चतुरक्षरबीजात्मा स्वभूश्चित्कीर्तिभूषणः ॥ १३३॥

अगाधबुद्धिरक्षुब्धश्चन्द्रसूर्याग्निलोचनः ।
यमदंष्ट्रोऽतिसंहर्ता परमानन्दसागरः ॥ १३४॥

लीलाविश्वम्भरो भानुर्भैरवो भीमलोचनः ।
ब्रह्मचर्याम्बरः कालस्त्वचलश्चलनान्तकः ॥ १३५॥

आदिदेवो जगद्योनिर्वासवारिविमर्दनः ।
विकर्मकर्मकर्मज्ञोऽनन्यगमकोऽगमः ॥ १३६॥

अबद्धकर्मशून्यश्च कामरागकुलक्षयः ।
योगान्धकारमथनः पद्मजन्मादिवन्दितः ॥ १३७॥

भक्तकामोऽग्रजश्चक्री भावनिर्भावभावकः ।
भेदान्तको महानग्र्यो निगूहो गोचरान्तकः ॥ १३८॥

कालाग्निशमनः शङ्खचक्रपद्मगदाधरः ।
दीप्तो दीनपतिः शास्ता स्वच्छन्दो मुक्तिदायकः ॥ १३९॥

व्योमधर्माम्बरो भेत्ता भस्मधारी धराधरः ।
धर्मगुप्तोऽन्वयात्मा च व्यतिरेकार्थनिर्णयः ॥ १४०॥

एकानेकगुणाभासाभासनिर्भासवर्जितः ।
भावाभावस्वभावात्मा भावाभावविभाववित् ॥ १४१॥

योगिहृदयविश्रामोऽनन्तविद्याविवर्धनः ।
विघ्नान्तकस्त्रिकालज्ञस्तत्त्वात्मा ज्ञानसागरः ॥ १४२॥

इतीदं दत्तसाहस्रं सायं प्रातः पठेत्तु यः ।
स इहामुत्र लभते निर्वाणं परमं सुखम् ॥ १४३॥

गुरुवारे दत्तभक्तो भक्तिभावसमन्वितः ।
पठेत्सदैव तो ह्येतत्स लभेच्चिन्तितं ध्रुवम् ॥ १४४॥

इति श्रीमद्दत्तात्रेयपुराणोक्तं
श्रीमद्दत्तात्रेयसहस्रनामस्तोत्रं सम्पूर्णम् ॥